॥ श्रीगणेशाष्टोत्तरशतनामस्तोत्रम् ॥

श्री गणेशाय नमः ।
यम उवाच ।
गणेश हेरंब गजाननेति महोदर स्वानुभवप्रकाशिन् ।
वरिष्ठ सिद्धिप्रिय बुद्धिनाथ वदंतमेवं त्यजत प्रभीताः ॥ १॥

अनेकविघ्नांतक वक्रतुंड स्वसंज्ञवासिंश्च चतुर्भुजेति ।
कवीश देवांतकनाशकारिन् वदंतमेवं त्यजत प्रतीभाः ॥ २॥

महेशसूनो गजदैत्यशत्रो वरेण्यसूनो विकट त्रिनेत्र ।
परेश पृथ्वीधर एकदंत वदंतमेवं त्यजत प्रतीभाः ॥ ३॥

प्रमोद मोदेति नरांतकारे षडूर्मिहंतर्गजकर्ण ढुण्ढे ।
द्वन्द्वारिसिन्धो स्थिर भावकारिन् वदंतमेवं त्यजत प्रतीभाः ॥ ४॥

विनायक ज्ञानविघातशत्रो पराशरस्यात्मज विष्णुपुत्र ।
अनादिपूज्याऽऽखुग सर्वपूज्य वदंतमेवं त्यजत प्रतीभाः ॥ ५॥

वैरिच्य लंबोदर धूम्रवर्ण मयूरपालेति मयूरवाहिन् ।
सुरासुरैः सेवितपादपद्म वदंतमेवं त्यजत प्रतीभाः ॥ ६॥

वरिन्महाखुध्वजशूर्पकर्ण शिवाज सिंहस्थ अनंतवाह ।
दितौज विघ्नेश्वर शेषनाभे वदंतमेवं त्यजत प्रतीभाः ॥ ७॥

अणोरणीयो महतो महीयो रवेर्ज योगेशज ज्येष्ठराज ।
निधीश मंत्रेश च शेषपुत्र वदंतमेवं त्यजत प्रतीभाः ॥ ८॥

वरप्रदातरदितेश्च सूनो परात्पर ज्ञानद तारवक्त्र ।
गुहाग्रज ब्रह्मप पार्श्वपुत्र वदंतमेवं त्यजत प्रतीभाः ॥ ९॥

सिधोश्च शत्रो परशुप्रयाणे शमीशपुष्पप्रिय विघ्नहारिन् ।
दूर्वाभरैरचित देवदेव वदंतमेवं त्यजत प्रतीभाः ॥ १०॥

धियः प्रदातश्च शमीप्रियेति सुसिद्धिदातश्च सुशांतिदातः ।
अमेयमायामितविक्रमेति वदंतमेवं त्यजत प्रतीभाः ॥ ११॥

द्विधा चतुर्थिप्रिय कश्यपाश्च धनप्रद ज्ञानप्रदप्रकाशिन् ।

चिंतामणे चित्तविहारकारिन् वदंतमेवं त्यजत प्रतीभाः ॥ १२॥

यमस्य शत्रो अभिमानशत्रो विधेर्जहंतः कपिलस्य सूनो ।
विदेह स्वानंदजयोगयोग वदंतमेवं त्यजत प्रतीभाः ॥ १३॥

गणस्य शत्रो कमलस्य शत्रो समस्तभावज्ञ च भालचंद्र ।
अनादिमध्यांतमय प्रचारिन् वदंतमेवं त्यजत प्रतीभाः ॥ १४॥

विभो जगद्रूप गणेश भूमन् पुष्टेःपते आखुगतेति बोधः ।
कर्तुश्च पातुश्च तु संहरेति वदंतमेवं त्यजत प्रतीभाः ॥ १५॥

इदमष्टोत्तरशतं नाम्नां तस्य पठंति ये ।
शृणवंति तेषु वै भीताः कुरूध्वं मा प्रवेशनम् ॥ १६॥

भुक्तिमुक्तिप्रदं ढुण्ढेर्धनधान्यप्रवर्धनम् ।
ब्रह्मभूतकरं स्तोत्रं जपन्तं नित्यमादरात् ॥ १७॥

यत्र कुत्र गणेशस्य चिह्नयुक्तानि वै भटाः ।
धामानि तत्र संभीताः कुरूध्वं मा प्रवेशनम् ॥ १८॥

इति श्रीमदांतये मुद्गलपुराणे यमदूतसंवादे
गणेशाष्टोत्तरशतनामस्तोत्रम् समाप्तम् ॥